" अमरी किन्नरी वेयं, खेचरी वा महीचरी । केनापि कारणेनाभूदन्या कन्या घटेत न ॥ १७ ॥ "
" राहोरहिरिपोर्भीत्या शशिना शेषभोगिना । वक्त्रवेणीनिभादेणी-नेत्रासौ किं शरणियता[1] ? ॥ १८ ॥ "

इति ध्यायन्नवक्-बाले ! का त्वम् ?, साऽवक् रत्नवेश्मस्वामिनो यक्षस्य सुताऽहम् । स क्वाऽस्ति ? पातालगृहे, तस्य को मार्गः ? ज्वलद्वह्निकुण्डे पतनमिति श्रुत्वा सोऽचिन्तयत् । मया तत्र गन्तव्यम् । " साहसं विना न सिद्धिः " । यतः—
" साहसी[ हं ] लच्छी हवइ, न हु कायरपुरिसाहं । कन्न[ हं ] कञ्चनकुण्डलं, अञ्जण पुण नयणाहं ॥ १ ॥ "
" तं कांइ आरंभीइ, महिमण्डलि विवसाओ । जीणइ च्यारइ सिर धुणइ, हरि हर विहि जमराउ ॥ २ ॥ "

अथाऽसौ भृत्यं नृपस्य शुद्धिं ज्ञापनाय पश्चात्प्राहिणोत् । सोऽपि तन्नृपायाऽज्ञापयत् । नृपोऽपि मन्त्रिणं स्मृत्वाऽऽह । भवता खेलितं सत्त्वं न्याय्यं[2] फलं तु मे पुनः । मन्त्र्यपि प्रातः स्नात्वाऽहो ! सत्त्वमिति बालयाऽऽलप्यमानो[3] वह्निकुण्डेऽपतत् । यक्षप्रभावादक्षताङ्गः[4] पातालगृहे सिंहासनमलञ्चक्रे । यक्षोऽपि यक्षिणीयुक् प्रत्यक्षीभूय तामेव कन्यां ढौकनीचक्रे । चिरं मार्गं पश्यतां प्राप्तोऽस्येनां सुतां वृणु इति यक्षोक्ते, मन्त्र्याह देवा निरपत्याः, कथं ते सुता ? यक्षोऽवक् शृणु—

भूभामिनीभालतिलके तिलकपुरे द्विधापि धनाढ्यः श्रेष्ठी, श्रीमती कान्ता कान्तभक्ता । अन्यदा श्रेष्ठी श्रीजयसिंह सूरिगुरुं[5] वने समेतं श्रुत्वा नन्तुं ययौ । गुरुभिर्व्याख्याने पर्वतिथिवर्णनं कृतम् । तथाहि—
" जइ सव्वेसु दिणेसुं पालह किरियं तओ हवइ लट्ठं । जइ पुण तहा न सक्कइ, तहवि हु पालिज्ज पव्वदिणं ॥ १ ॥ "

१ हरिणीकृता. छा. । २ भाग्यं. छा. हं. । ३ जल्पमाने. छा. । ४ सत्त्व० छा. । ५ श्रीसमयामृतसूरि० छा. ।

" भयवं बीयपमुहासु पञ्चसु तिहीसु विहियं धम्माणुट्ठाणं किं फलं होइ? गोयमा! बहुफलं हवइ। जम्हा एयासु पञ्चसु तिहिसु पाएणं जीवो परभवाउयं कम्मं समज्जिणइ। तम्हा साहुणा वा साहुणीए वा सावएण वा सावियाए वा अन्नेण वा जीवेणं तवोविहाणाइ धम्माणुट्ठाणं सुहपरिणामाए कायव्वं। जम्हा सुहआउयं कम्मं समज्जिणइ" इति महानिशीथसुयखंधचूर्णौ।

" बीया दुविहे धम्मे, पञ्चमी नाणेसु, अट्ठमी कम्मे। एगारसी अंगाणं, चउद्दसी चउदपुव्वाणं॥ १॥"

" सामाईयकयस्स समणो वा सावगस्स कइविहे धम्मोवगरणे पन्नत्ते? तं जहा-ठवणारियत्ति, जवमालियत्ति, दण्ड-पुंच्छयणत्ति", इति अनुयोगद्वारचूर्णौ।

श्रीआवश्यकेऽपि—

" सव्वेसु कालपव्वेसु, पसत्थो जिणमये तवो जुग्गो। अट्ठमीचउद्दसीसु य, नियमेण हविज्ज पोसहिओ॥ "

पौषधाधिकारे श्रीभगवतीसिद्धान्तेऽपि—

" तत्थ णं तुंगियाए नयरीए बहवे समणोवासगा परिवसंति। इड्ढा दित्ता विच्छिन्नविउलभवणसयणासणजाणवाहणाइन्ना बहुजायरूवरयया जाव चाउद्दसट्ठमुद्दिट्ठपुन्निमासिणीसु पडिपुन्नं पोसहं कारेमाणा पालेमाणा इत्यादि।

लोकेऽपि—

" चतुर्दश्यष्टमी चैवममावास्या च पूर्णिमा। पर्वाण्येतानि राजेन्द्र!, रविसङ्क्रान्तिरेव च॥ १॥"

---

१ निरयावलियासुयखंधचूर्णौ छा. ह.। २ करेकारेह० छा.।

" तैलस्त्रीमांसभोजी[1] च, पर्वस्वेतेषु वै पुमान्। विण्मूत्रभाजनं नाम, नरकं याति वै मृतः ॥ २ ॥ "

इत्थन्तरे [2]सेणिओ( सिद्धि ! ) भणइ, भयवं पवतिहीए किं वज्जेयव्वं ! जिणो ( गुरु ! ) भणइ।

" न्हाणं चीवरधोवण मत्थयगुंथण[अ]बंभचेरं च। खण्डणपीसणलिंपण वज्जेयव्वाइं पव्वदिणे ॥ १ ॥"

इत्युपदेशं श्रेष्ठी श्रुत्वा पर्वतिथिनिष्ठामादृत्य गृहमागात्। धर्मकृत्यं कुर्वन्नन्यदाऽष्टम्यां पोषधं लात्वा खण्डगृहे कायोत्सर्गेण तस्थौ। तावत् सौधर्मेन्द्रेण तत्प्रशंसा कृता। माणिभद्रो[3] देवस्तत्रागत्य तमक्षोभयत्। परं न चुक्षोभ। हृष्टो देवः तत्पुरो नाट्यं चक्रे। सूर्योदये कायोत्सर्गे पारिते देवोऽवदत्। तुष्टोऽस्मि। श्रेष्ठी नेहते किञ्चित्तथापि व्योमगामिनीं विद्यां ददौ। परमूचे एषा वार्ता, द्वितीयं जनं विना तृतीयो न ज्ञाप्यः। यदा तृतीयो ज्ञास्यति तदा पतिष्यसीत्युक्त्वा देवः स्वर्ययौ। श्रेष्ठी गृहमाययौ। विद्यया दूरेष्वपि[4] तीर्थेषु देवान्नमति। कान्तया स्वरूपं पृष्टेन श्रेष्ठिना स्नेहात्तस्याः पुरः सशपथं कथितम्। अन्यदाऽष्टापदे श्रेष्ठी जिनान्नत्वा वव्रले, तावत्पपात, न भूतले, किन्तु सरसीजले। हा! किमेतद्! भव्यं? नाऽऽस्फालितोऽस्मि शिलातले। सरोवरान्निर्गत्य पालौ निविष्टो दध्यौ। नूनं श्रेष्ठिन्या कस्याप्युक्तम्। उच्यते च—

" स्त्रीणां गुह्यं न वक्तव्यं, प्राणैः कण्ठगतैरपि। नीयते पक्षिराजेन, पुण्डरीको यथा फणी ॥ १ ॥ "

तत्कथा चैवम्—

पुण्डरीकनागो गरुडात् त्रस्तः क्वापि कुर्कुरग्रामे कामपि स्त्रियं भार्यां कृत्वा छात्रान् पाठयंस्तिष्ठति विप्रवेषः। अन्यदा

१ भोगी छा.। २ गोयमो. छा.। ३ एगो देवो इत्युक्तं प्राकृतप्रबन्धे। ४ अष्टापदादिषु. हं.।

स्वस्वरूपं तस्याः प्रोचे। साऽपि अहं पुण्डरीकनागवल्लभेति वदन्ती जलहारिणी वर्षर्ति तावता गरुडोऽपि पुण्डरीकं पश्यन्नीर-हारिणी [वचो।] दण्डके, तत्रस्थं श्रुत्वा चटिकारूपेण तद्भार्याघटे चटित एव तद्गृहं ययौ। गरुडरूपेण च तं गृहीत्वा पत्न्यां पश्यन्त्यामचलत् पुण्डरीकः "स्त्रीणां गुह्यं न वक्तव्यमिति" श्लोकं पपाठ। गरुडेनापि तदैव पक्षभित्तौ लिखित्वा शिक्षितः स्वस्थानं गतः। तदा तद्भार्ययोक्तम्। धिक् गुरुद्रोह्यसौ। ततो गरुडेन पुण्डरीको मुक्तः। स्वस्थोऽजनि। इत्यादि विकल्प-यन्कष्टेन षड्भिर्मासैः श्रेष्ठी अष्टमीदिने सायं गृहमागात्। हृष्टं सर्वं, श्रीमती कान्तमायान्तं दृष्ट्वा प्रतिपत्तिं चक्रे। उत्थिता सा, तं स्नपयितुम्। सोऽवक् अद्याऽष्टमी। सोचे स्मित्वा। इयन्त्यहानि शीर्षजजटाजूटादङ्गे मलक्लिन्नत्वाच्च तापसव्रतं वो जातमस्ति। ×षण्मासी क्रियामय्यैवाऽऽसीदद्य× सर्वं मुत्कलमिति हसन्ती तैलं शीर्षेऽक्षिपत्। सोऽपि स्नेहेन संसेहे। स्नात्वा बुभुजे। भोजनादनु श्रीमती स्वपाणिना पत्ये पत्राण्यदात्। सोऽप्यद्य पर्वतिथिरस्तीति वदन्नपि स्नेहा–त्तान्यलात् अवक् च।

चूर्णमानीयतां तूर्णं, पूर्णचन्द्रनिभानने !। सीदन्ति स्वर्णवर्णानि, पर्णान्याकर्णलोचने ॥ १ ॥

सा चूर्णं ददे। एवं पर्वतिथौ सर्वनियमभङ्गं चक्रे। तदा श्रीमत्या गर्भोऽभूत्। तृतीयस्य कथनकारणं पृष्टा साऽऽह। सख्येकैकदा स्वभर्तुर्देवपूजादिकं पुण्य वर्णयन्ती मयोक्ता–किं वेत्सि ! मत्पतितुल्यः कोऽपि नास्ति। यमिन्द्रः स्तौति। देवेन यस्मै विद्याऽदाय्यधुनाऽष्टापदं गतोऽस्तीत्युक्तं, नान्यत्। सोऽपि पतनादिवार्तामूचे। तौ प्रीत्या तिष्ठतः। काले श्रीमत्या सुता प्रसूताऽतिसुरूपा लक्ष्मीर्नाम चक्रे। साऽष्टवर्षाऽभूत् लाल्यमाना क्रमेण, तदा केवलिश्रीधर्मघोषमुनिरागात्।

१ हसति च. छा. । २ उद्यता छा. । × × इतिपाठः छा. प्रतौनास्ति । ३ स्नेहला छा. । ४ नभोगामिनी० हं. ।

श्रेष्ठी कान्तापुत्रीयुक् नन्तुं ययौ। देशनायां देवेषु गतिर्व्याख्याता। तथा—

"युगलिन ईशानान्तदेवेषु यान्ति। सम्मूर्च्छजतिर्यञ्चो व्यन्तरभवनपतिषु। विषभक्षणवह्निज्वलनकूपपतनरज्जुग्रहक्षुत्तृड्मृता व्यन्तरेषु। बालतपःकृतो बहुरोषोऽसुरेषु। तापसा ज्योतिष्केषु। परिव्राजका ब्रह्मलोके। पञ्चेन्द्रियतिर्यञ्च[:]· सहस्रारे। श्रावका अच्युते। यतिलिङ्गी-मिथ्यादृग् ग्रैवेयकेषु-जिनवचनमश्रद्दधानो मिथ्यादृग् ज्ञेयः।

"पयमक्खरंपि इक्कं, जो (ज?) इ न रोयइ सुत्तनिद्दिट्ठं। सेसं रोयंतो वि हु, मिच्छादिट्ठी जमालिव्व॥ १॥"

जमालिदृष्टान्तोऽत्र सुधिया वाच्यः।

"छद्मस्थः साधुः सर्वार्थसिद्धौ केवली सिद्धौ च एषोत्कृष्टा गतिः। जघन्यतः श्राद्धसाध्वोः सौधर्मे।"

अत्रावसरे श्रेष्ठिना स्वगतिः पृष्टा। मुनिरूचे-त्वं व्यन्तरेषु यक्षो भावी, कान्ता यक्षिणी च। हा! मुने! किमिदं मम सम्यग्धर्मकृतः। मुनिरवक्-पर्वतिथिनियमभङ्गे देवायुर्बद्धं तन्नान्यथा। श्रेष्ठी स्वं निनिन्द। केवल्यूचे—

"विसयासत्ता जीवा लहंति नरनिरयतिव्वदुक्खाइं। विसयविसमोहियाणं, नासइ धम्मंफलं सव्वं॥ १॥"

तदाऽऽकर्ण्य लक्ष्मीर्दीक्षामयाचत। मुनिः-बाले! तवाऽद्यापि भोगफलं कर्मास्ति। तत्र पितरौ भूतरत्नाटव्यां यक्षौ भविष्यतः। तत्र च रत्नशेखरनृपमन्त्री मतिसागर एष्यति स त्वां परिणेष्यति। ततस्त्रयोऽपि गृहमागुः। दंपती मृता वाऽऽवामभूताम्। सा च सुतेयं स्नेहात्स्वान्तिकमानीता। तदेतामुद्वहेत्युक्त्वा यक्षे स्थिते मन्त्र्याह-स्वामिकार्येऽसिद्धे किमिदं

१ तिरिय० छा. ह.।

युक्तम् । यक्षः–अहमपि ते सान्निध्यकारी भावी । मन्त्रिणा सोढा । यक्षो हृष्टोऽवक् किं स्वामिकार्यं, मन्त्री–रत्नवतीक्ष्यते । ज्ञानेनाऽवेक्षा( क्ष्या ? )ऽऽह । समुद्रान्तः सप्तशतयोजनमाने सिंहलद्वीपे जयपुरे जयसिंहदेवराज्ञः सुता रत्नवती ज्ञेया । मन्त्री–मया तत्र गम्यम् । यक्षेण निमेषेण जयपुरोपवने मुक्त्वा स उक्तः । इदं जयपुरम् । रूपपरावर्तविद्यां दत्त्वा कार्यं स्मर्योऽहम् । मर्वं सेत्स्यतीत्युक्त्वा यक्षोऽगात् । मन्त्री प्राकारपरिखाप्रवरपौरावासमण्डितं पुरं पश्यति ।

"यत्र भानुसखकाञ्चनकुम्भा जैनमन्दिरशिरः परिगृह्य ।
स्थानलाभविधुरं धृतदण्डास्तर्जयन्ति तरणिं ध्वजहस्तैः ॥ १ ॥
अहो यदभ्रंलिहगेहमण्डलीशिरःस्थितः पौरजनो निशाकरे ।
करप्रयासेन विनापि बन्धुरे मुखं सुखं दर्पणवद् विलोकते ॥ २ ॥"

मन्त्री पुराऽऽमन्ने यक्षदत्तविद्यया स्वर्णदण्डमण्डितकरा युवती योगिनी जज्ञे । सा योगिनी जनानां चित्रं कुर्वाणा कन्यान्तःपुरप्रतोलिं प्राप्ता । प्रतिहारीनिवेदिताऽन्तर्गता । तां रत्नवतीं वीक्ष्य विसिष्मये । अहो! विधेरिदं रूपसर्वस्वमिति-दध्यौ च ।

"मत्तद्विपेन्द्रगमना परितो दुकूल–वप्रा विभूषितघनालकसत्पताका ।
लीलावती लसदुरोरुहसौधकुम्भा । सेयं विभाति मकरध्वजराजधानी ॥ १ ॥

---

१ मंडपावली० ह० ।

पक्वबिम्बाधरा त्रस्तमृगशावकलोचना । पूर्णचन्द्रानना सेयं, योग्या तस्यैव भूपतेः ॥ २ ॥"

कन्याऽपि तां योगिनीमद्भुतां वीक्ष्याऽऽसनं दत्त्वा कुशलस्वागतादि पप्रच्छ । योगिन्याह—

"जर आवइ जोवण गलइ नितु उगमतइ भाणि । बाला कुसल न पूछीइ हाणि विहाणि विहाणि ॥ १ ॥
गर्भावासे महादुःखं विशेषान्निर्गमे पुनः । गर्भाऽऽगतानां जीवानां, स्वागतं पृच्छयते कथम् ? ॥ २ ॥"

कन्या चमत्कृताऽऽह–क्व वः स्थितिः ? योगिन्याह—

"काया पाटणि हंसराजा पवन फिरइ तलारो । तीणइ पाटणि वसइ योगी जाणइ जोगविचारो ॥ १ ॥"

कन्यया अहो ! वैराग्यरङ्गो अस्या इति स्थापिता सा कौतुकेनैव, मध्याह्ने जाते योगिन्या अपि पात्रमपूरि । भोजनादनु अध्यात्मं पृष्टा साऽऽह—

"एक मढुली पांच जणाहो छठ्ठउ वसइ चंडालो । नीकालतां न नीकलइरे तीणइ कीउ विटालो ॥ १ ॥
अयं-मन एव 'मनो यत्र मरुत्तत्र, मरुद्यत्र मनस्ततः' । अतस्तुल्यक्रियावेतौ संवीतौ क्षीरनीरवत् ॥ २ ॥
यथा सिंहो गजो व्याघ्रो भवेद्वश्यः शनैः शनैः । अन्यथा हन्ति यन्तारं तथा वायुरसंयतः ॥ ३ ॥
युक्तं युक्तं त्यजेद्वायुं युक्तं युक्तं च सेवयेत् । युक्तं युक्तं च बध्नीयादेवं सिद्धिमवाप्नुयात् ॥ ४ ॥
रेचकाद्रेचयेद् वायुं पूरकाद्वायुपूरणम् । कुम्भकात् स्तम्भयेद्वायुं सर्वरोगान् विनिर्जयेत् ॥ ५ ॥"

एवं गोष्ठयामन्यदा कन्यैकान्ते योगिनीमाह । कुतस्ते वैराग्यं, यौवने योगः ? । साऽऽह–हस्तिनागपुरे सूरक्षत्रियः, भार्या

गङ्गा, तयोः कन्या सुमतिः। सा पितृमातृभ्रातृमातुलैः पृथक् पृथक् वरेभ्यो दत्ता। ते दैवादेकत्र लग्ने परिणेतुं प्राप्ताः। योद्धुं लग्नाः, रणे जायमाने जनक्षयं दृष्ट्वा चितां विधाप्य सा वह्निमाविशत्। तत् ज्ञात्वा तेषु चतुर्षु वरेष्वेकश्चितायामपतत्। द्वितीयो अस्थीनि, तृतीयो भस्म लात्वा गङ्गां समुद्रं च प्रति क्षेप्तुमचलत्। तुर्यस्तु तत्रैव चितास्थाने भोजनावसरे पिण्डमेकं मुक्त्वा शेषं भुंजंस्तत्र तिष्ठति। तृतीयो मार्गे गच्छन् क्वापि ग्रामे रन्धिनीगृहेऽन्नं कारितवान्, भोक्तुमुपविष्टः, सा परिवेषयति, तद्बालसुतस्तु रोदिति कार्यं कर्तुं नो दत्ते। तयासावुत्पाट्याग्नौ क्षिप्तः। स भोजनं त्यक्त्वा उत्थातुं लग्नोऽहो! पापिनीगृहम्। साऽपि तमूचे-भ्रातर्भुङ्क्ष्व। अपत्यानि कस्यापि नानिष्टानि, यत्कृते पितरौ किं किं न कुरुतः?। पश्चादेनं जीवयिष्यामि। सोऽपि द्रुतं भुक्त्वोत्थितः। मापि गृहमध्यात् [ अमृतरस ] कुम्पकमानीयामृतच्छटां चिक्षेप। निर्गतश्च रणद्रुणघुर्घुरो बालः। अहो! चित्रमिति चिन्तयन् सोऽपि ग्रामान्तर्दिनमतिक्रम्य सायं तद्गृहमागत्याग्रे सार्थो नाभूदित्युत्तरेण तत्र सुप्त्वा निशि तं कुम्पकं लात्वा हस्तिनागपुरमागमत्। रक्षके पश्यत्यमृतेन चितास्थानं सिषेच उज्जीविता च सहदग्धवरेण युता कन्या। तावद्गङ्गायां चाऽऽस्थि क्षेप्ताप्यागात्। यावच्चत्वारोऽपि मिलिताः परस्परं विवदन्ते गतास्तत्रत्यबालचन्द्रराज्ञः सभायां राज्ञा मन्त्रिणो भाषिताः।

"आसन्ने रणरङ्गे मूढे मंते तहेव दुब्भिक्खे। जस मुहं जोइज्जइ, सो पुरिसो पुहविए विरलो॥ १॥"

वृद्धामात्येनोक्तम्। शृणुत, भज्यते वादः। येनेयमुज्जीविता सोऽस्याः पिता। यः सहजीवितः स भ्राता। येनाऽस्थीनि गङ्गायां क्षिप्तानि स पुत्रः। येन चितास्थानं रक्षितं सोऽस्या भर्ता।

एवं वादे भग्ने शुभलग्ने चतुर्थेन रूपचन्द्राख्यवरेण सोढा, स्वपुरं च ययौ। तया भाग्यवत्या पत्न्या स सामान्योऽपि देशपतिर्जज्ञे। स्नेहात्तां पट्टदेवीं चक्रे। रूपचन्द्रोऽन्यदा तां वामपार्श्वे निवेश्य गवाक्षस्थो मातङ्गमातङ्गीभ्यां गीतमगापयत्। मातङ्गीरूपेऽनुरक्तो निजं हारं तस्यै ददौ। मातङ्ग उक्तश्च। इयं त्वया स्वप्रिया मत्सौधपाश्चात्यवाटिकायां प्रेष्या। तद्वीक्ष्य देव्याऽचिन्ति। धिक् निर्ह्रीकान्नरान्!।

"स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति। संपूर्णेऽपि तडागे काकः कुम्भोदकं पिबति॥ १॥"

इति विरक्ता सा योगिन्यभूत् रूपचन्द्रे निषिध्यति साऽवोचत्—

"प्रत्यक्षेऽपि कृते पापे मूर्खो नैवाऽवबुध्यते। स्कन्धाऽऽरोपितदुर्वृत्तो, नापितः पूरणो यथा॥ १॥"

तथाहि—

क्वापि ग्रामे पूरणो नापितः। स भार्या दुश्चारिणीति शङ्कितो ग्रामान्तरच्छलेन च्छन्नो दिने स्थित्वा सायं पत्न्यां नीराद्यर्थं गतायां स्ववेश्मागत्य खट्वाऽधोऽस्थात्। तद्भार्यापि तस्मिन् दिने हृष्टा—

"पुंश्चली मिलति येन येन तं, तं ब्रवीति मृदुमन्दमानसा!।
आजनुर्न विदितो नरः परस्त्वन्निमित्तमिदमत्र साहसम्॥ १॥"

इति रीत्या केनापि नरेण सह स्नेहं घटित्वाऽऽगत्य खट्वायां सुप्ता, तावदन्यनर उपेत्य तल्पे निविष्टः। तमावर्जितुमुत्तिष्ठन्त्या इतस्ततश्चलायास्तस्या हस्तोऽधःस्थितः स्वपतिकाये लग्नः सा शंकिता, नूनं स्वपतिरेवेति परं नरं प्राह। हा!

भद्र ! मां सतीं मा स्पृश ! । सोऽवक् तत्किमाहूतोऽहम् ! । माऽवक् शृणु । अद्य रात्रौ मत्कुलदेव्यागत्योचे । वत्से ! त्वत्पतिर्मरिष्यति । भीताऽहं जगौ । कोऽप्युपायोऽस्ति ? येन जीवति ? । देव्याह–अस्ति, त्वया तु न सिध्यति । मयोक्तं प्राणानपि त्यजामि । देव्याह त्वया प्राणास्त्यज्यन्ते परं तन्न स्यात् । अहं जगौ तथापि कथय । देव्याह अन्यनरेण रमस्व । मया कर्णौ पिहितौ । देव्याह–तदाऽन्यनरेण महैकत्र तल्पे स्थातव्यम् । त्वत्पतिरद्यप्रभृति पुनर्वर्षशतं जीविष्यति । मयाऽऽदृतम् । देवी गता । ततस्त्वमाहूय तल्पे स्थापितोऽसि । न स्पृश्याऽहम् । यतः—

" गतियुगलकमेवोन्मत्तपुष्पोत्करस्य, त्रिनयनतनुपूजा वाऽथवा भूमिपातः ।
विमलकुलभवानामङ्गनानां शरीरं, पतिकरकरजो वा सेवते सप्तजिह्वः ॥ १ ॥ "

इदं श्रुत्वा मूर्खो नापितः स्त्रीचरित्रं सत्यमेव मन्यमानः खट्वाऽधो निःसृत्य हा ! पतिव्रते ! धन्योऽस्मीति वदन् तौ द्वावपि स्कन्धयोरारोप्य पटहं वादयन् मम पत्न्या वर्षशतं जीवितं वर्द्धितमिति हर्षतो नृत्यन् स्वजनगृहेषु भ्रमति[1] । केनापि दक्षेण तद्भार्यास्वरूपं ज्ञात्वोक्तम्–प्रत्यक्षेऽपिकृते–इत्यादि । अहमपि किं नापितमदृश्यऽस्मीत्युक्त्वा योगिनी जाता तत्पुरात्पृथ्वीं भ्रमन्त्यत्रागात् । माऽहमेव ज्ञेया इति मतिकल्पितं स्ववृत्तमुक्त्वा कन्यामाऽऽह । त्वं कुतो नरद्वेषिणी ? कन्याऽऽह अस्तीयं वार्ता—

" जे जिम अच्छइ ते तिम अच्छउ, होसिइ फूलि फले सिइ कच्छउ ।

---

१ नृत्यति च छा.

सूनइ देउलि आहरजाहर अनेथीबूं अनेथीब वाहर ॥ १ ॥ ”

योगिन्याह कुतः ? सा निःश्वस्योचे । हे सखि ! नाहं नरद्वेषिणी किन्तु वराभिलाषिणी । परं मन्दभाग्या वरं न लभे योगिनी प्रोचे–नरविद्याधरभृतायां धरायां तवैव वरो न। कन्या–किं क्रियते तैर्येषु निःस्निह्यति मनः, योगिनी–क स्नेहः ?॥ कन्या–पूर्वभववरे, कः पूर्वभवः ? श्रूयताम्—

अयोध्याऽऽसन्ने वने मृगो मृगी चाभूतां मिथः सस्नेहौ । अन्यदा श्रीदशरथाऽङ्गजः श्रीरामदेवस्त्यक्तराज्यो गृहीतसंयमः-तत्राऽगात्। तस्मिंस्तत्र तपस्यति सिंहव्याघ्रा अपि शान्ता जाताः । अन्यदा केनापि काष्ठभारवाहकेनोक्तम् । मुने ! स्तोकैर्मम धर्मं वद। श्रीराममुनिना त्वया पर्वतिथिरेव पाल्येत्युक्तम् । बह्वारम्भत्यागपोषधादिविधिरुक्तश्च । ततस्तेन पर्वतिथिधर्मः प्रतिपन्नः, तत्रागताभ्यां ताभ्यां मृगीमृगाभ्यामपि तच्छ्रुतम् । ततस्तावपि पर्वतिथौ पर्वतिथौ चतुर्विधाहारं त्यक्त्वा श्रीराममुनिसमीपे तिष्ठतः नमस्कारोऽपि हृदि शिक्षितः । तयोः संज्ञा सर्वाऽस्ति परं न वाक् ।

“ अपदाः पदमिच्छन्ति [चेच्छन्ति]पशवो गिरं । मानवा ज्ञानमिच्छन्ति, सिद्धिमिच्छन्ति योगिनः ॥१॥”

तौ काले मृतौ । मृगीजीवोऽहं राजसुता जाता। मृगजीवं तु न वेद्मि । योगिन्याह कथं–वेत्सि पूर्वभवम् ? । कन्याऽऽह–जातिस्मरणात्, कुतो जातिस्मृतिः–कन्याऽऽह–शृणु, यदाऽहं अष्टवार्षिकी जाता तदा कलार्हा कलाः शिक्षमाणाऽन्यदाऽऽश्विनी पूर्णिमायां निशि सौधोपरिस्थाऽस्मि उदितचन्द्रो व्योम्नि वने सिंह इवोच्चैश्चटितश्च । सख्योक्तम्—

१–तेन तदभावे पाणिग्रहण न करोमि. हं०

" लक्ष्मीक्रीडातडागं रतिधवलगृहं दर्पणो दिग्वधूनां,
पुष्पं श्यामालतायास्त्रिभुवनजयिनो मन्मथस्याऽऽतपत्रम् ।
पिण्डीभूतं हरस्य स्मितममरसरित्पुण्डरीकं मृगाङ्को,
ज्योत्स्नापीयूषवापी जयति सितवृषस्तारकागोकुलस्य ॥ १ ॥"

मयाऽप्यालोकि मृगांकोऽमृतं वर्षन् नेत्रयोः ।

तत्रस्थं च मृगं पश्यन्त्या अद्य कल्ये वा दृष्टोऽयमिति स्मरन्त्या मे जातिस्मरणमुत्पन्नम् । मूर्च्छिताऽपतम् । सखीभिश्चन्दनाद्यैः सचेतना कृता । ताभिः किमिदमिति पृष्टेऽसिद्ध्यमानं कार्यं जल्पन्मूर्ख इति विचिन्त्याऽन्यन्मयोत्तरं कृतम् । परं मृगजीवे स्नेहोऽभूद्वरः स एव ममेति निश्चिश्ये । पिताऽपि वरं चिन्तयन्निषिद्धः । तत्प्राप्त्यै कामदेवमर्चयन्त्यस्मि । तद्वियोगदुःखं हृदेव वेत्ति—

" दिणु जायइ जणवत्तडी, पुण रत्तडी न जाइ । अनुरागी अंनु रोगीया, सहज सरीखुं माइ ॥ १ ॥
सखि ! मां सुखयन्ति शारदो, न शशी नाम्बुरुहं न चन्दनम् ।
कदलीदलमारुतोऽपि न, तद्विरहानलदीप्तविग्रहाम् ॥ २ ॥"

ततः, सखि—त्वं योगिन्यसि । ध्यानेन पश्य । स मे भर्त्ता मिलिष्यति न वा ? । योगिन्यपि ध्यानं नाटयित्वा हृष्टा-

१ नइ० छा०

ऽऽह । सिद्धा मनोरथाः स्तोककालान्मिलिष्यति । कन्याऽऽह तर्हि कथय कथं ? योगिनी पुनर्ध्यानपूर्वमाह । कामदेव-प्रसादे द्यूतक्रीडां कुर्वन्नेवं तयोः परं प्रेमाऽभूत् । अन्यदा योगिन्याह यास्याम्यहमप्यन्यतीर्थानि नन्तुं, " न युज्यते योगिनामेकत्र बहु स्थातुम् " । कन्या साश्रुपातम्—

" तूय विणु दिण हुं गमिसु, किम एकलडी निरधार ।

योगिन्याह—

धीरी था दिणि थोडिले, मिलिसिइ तूं भरतार ॥ १ ॥"

कन्याऽऽह, तवैव वचनमस्त्विति वदन्ती तां व्यसृजत् । योगिन्यपि यक्षं स्मृत्वा क्षणाद्रत्नपुरमगात् । पश्यति सधूमं व्योम-वृक्षप्रासादगिरिशिखरस्थान् जनान् नृपं च चितां प्रदक्षिणयन्तम्, जनैरप्यूचे एका योगिन्येति नृपो धीरः कार्यः । तावत्साऽपि तत्राऽऽगताऽऽशिषं ददाना जनैर्नत्वोचे, सप्तमामाऽवधिः, पूर्णः, अमात्यः समेष्यति न वा ? नृपोऽवग् मुग्धा लोकाः । सोऽग्निकुण्डेऽपतत् । कुत एष्यति ? परं योगिनि ! वद दृष्टा श्रुता वा [सुता] रत्नवती नाम्नी काऽपि ? योगिनी स्मरयित्वाऽऽह । हुं अस्ति सिंहलद्वीपे राजसुता रत्नवती । तस्या (तया ?) चन्द्रबिम्बे मृगं पश्यन्त्या जातिरस्मर्यत । पूर्वभवे सा मृगी, मृगजीवं चविना वरं न वाञ्छति । नृपस्तच्छ्रुत्वा मूर्च्छितो जातिं स्मृत्वाऽऽह । हा ! प्रिये ! दूरे स्थिताऽसि किं कुर्वेऽहम् ?

१–नू यस्तत्र तव प्रवेशं निवारयिष्यति स पूर्वभववरस्तव पाणिग्रहणं करिष्यति इति श्रुत्वा सा हृष्टा सती विमलमुक्ताहारं समर्पयति० हं० ।

"उड्डीय वाञ्छितं यान्ति, वरमेते विहङ्गमाः । न पुनः पक्षहीनत्वात् पङ्गुप्रायः कुमानुषः ॥ १ ॥"

हा ! दैवेन बुद्धिनिधिर्मे मन्त्र्यपि हृतः । हा ! मन्त्रिन् ! क्वाऽसि ?

" यथा सूर्यं विना ध्वान्तैर्दुर्भिक्षैर्जलदं विना । दुःखैस्तथाऽभिभूतोऽहं, त्वां विना मतिसागर ! ॥ १ ॥

एहि मन्त्रिन्निति वदत्येव नृपे योगिनीरूपं त्यक्त्वा जातो मतिसागरो मन्त्री । हृष्टो जनो, नृपेणाऽऽलिङ्ग्य पृष्टः । सर्वं वृत्तमाचष्ट[3] । मन्त्री तदैव यक्षसान्निध्यात ससैन्यं नृपं सिंहलद्वीपेऽमुचत्। ततस्तत्रत्यजनैरयं राजा पृथ्वीं वीक्षमाणः कियद्भिर्प्रयाणैर्जयपुरोद्याने कामदेवप्रासादासन्ने सैन्यमस्थापयत्। पौरा वीक्षितुमायान्ति । जयसिंहदेवेनाऽपि सत्कृतो नृपोऽन्यदा कन्याऽऽगमाऽऽवसरे मन्त्रिगिरा प्रासादान्तर्मन्त्रिणा सह द्यूतेन रन्तुं लग्नः । तावत्कन्या सखीयुता वस्त्राऽऽच्छादितमुखास-नस्था प्रासादद्वारमाप्ता । प्रतीहारी स्वर्णकम्बया नरान्नाशयन्ती मध्यं प्रविष्टा । मन्त्रिणाऽऽहूतं निर्गत्योचे भद्रे ! मध्ये दूरदेशाऽऽगतो रत्नशेखरो राजा द्यूतेन रमते । स तु स्त्रीमुखं नेक्षतेऽधुना कन्ययाऽत्र नाऽऽगम्यम् । साऽपि तत्कन्यायै जगौ। तस्या योगिनीवचः स्मृतम्। वामनेत्रं च स्फुरितम । हृष्टा मध्ये प्रविष्टा तावन्मन्त्री–नार्योनार्य इति वदन्नग्रे पटीं धत्ते–स्म । कन्याऽऽह–किं पटीं धत्से ? मन्त्री–नृपः स्त्रीं नेक्षते । कन्या–स्त्रीभिः किं पापं कृतम् ? पृच्छ नृपं, मन्त्री–नृपाऽ-भिमुख वीक्ष्योचे । पूर्वभवप्रियामिच्छति नृपः । कन्या–कः पूर्वभवः ? । मन्त्री नृपमीक्षते । नृपोऽवक्किं बहूक्तेन ? ।

---

१–न कथमपि रतिं लभते० ह० । २–ततो मंत्री प्रणम्य रत्नवत्यर्पितहारार्पणपूर्वं० हं० । ३–त निशम्य राजा मन्त्रिण शंसति० ह० ।

" एकं सङ्केतं वच्मि हरिणी-अन्नइ हिरण लउ हूंतां वन हि मझारि ।
कुणि पुन्निहिं हउं अवतरिउ, राजा इणि संसारि ॥ १ ॥ "

इति श्रुत्वा साऽपि निर्भरस्नेहा " पव्वदिवसतपिहिं हुं उं, राजा पिउ संसारि " इति वदन्त्येव स्वयं पटीं अपसार्य तन्मुखचन्द्रं नेत्रचकोराभ्यां पिबन्ती राज्ञाऽपीक्ष्यमाणा सस्मितौत्सुक्यानुरागा स्तम्भस्वेदरोमांचादिसात्विकगुणैरपूरि । जगौ च प्राणेश ! दूरदेशस्थोऽपि मन्मनस्येवासीति । सखीजनस्तत्पित्रे न्यवेदयत् । सोऽपि तत्राऽऽगत्य तं वरं वीक्ष्य हृष्टः । तयोः पाणिग्रहणमहोत्सवं व्यधात् । करमोचने करिशतं[2] सामुद्रिकरत्नदुकूलादि च बह्वदात् । सोऽपि तां परिणीय ववले । तूर्यरवेण जनो वीक्षितुं मिमिले, अवक् च,

" द्वीपादन्यस्मादपि मध्याज्जलधेस्तथा दिशोऽप्यन्तात् ।
आनीय झटिति घटयति योग्यं विधिरभिमुखीभूतः ॥ १ ॥ "

दक्षैर्धर्म एव स्तुतः ।

" धर्मतः सकलमङ्गलावली, धर्मतः सकलशर्मसम्पदः ।
धर्मतः स्फुरति निर्मलं यशो, धर्म एव तदहो ! विधीयताम् ॥ १ ॥ "

राजा कियद्दिनांस्तत्र सगौरवं स्थित्वा पुरं प्रत्यचलत् । रत्नवत्यपि साश्रुरम्बां नत्वा शिक्षामयाचत । साऽपि तामङ्क

१–हरिणी अन्नइ हरिण लउ हूता वनह मझारि–पुन्नपुन्निराजा हूओ हउंते हरिणी नारी० हं० छा० । २–हयपंचशतानि० हं० ।

कृत्वा शिरः स्पृशन्ती साश्रुरूचे ।

“ गता पतिगृहं वत्से ! गुरूणां विनता भवेः । कुर्यास्त्वं भोजनं भुक्ते, निद्रां सुप्ते च भर्तरि ॥ १ ॥
नीरंगीच्छन्नवदना, नित्यं नीचैर्विलोचना । पिकीव मधुरालापा भवेस्त्वं श्वशुरालये ॥ २ ॥ ”

इति मातृशिक्षां लात्वा तां नत्वा पत्या सहाचालीत् । तत्पिताऽपि कियन्ति प्रयाणकान्यनुगम्य नृपेण सबहुमानं वालितोऽवनतां ।

“ पिताऽऽत्मनः पुण्यमनःपदं क्षमा धनं मनस्तुष्टिरथाखिलं नृपः ।
अतः परं पुत्रि ! न कोऽपि तेऽहमित्युदश्रुरेष व्यसृजन्निजौरसीम् ॥ १ ॥ ”

रत्नशेखरोऽपि द्वीपान्ताद्यक्षसान्निध्येनोदधेरुपरि भूत्वा स्वपुरं गत्वा महर्द्ध्या प्रविश्य तां पट्टदेवीं कृत्वा न्यायेन राज्यं धर्मं चक्रे । मन्त्र्यपि यक्षसुतया सह सुखं बुभुजे । राजा राज्ञी च जातिस्मरौ पूर्वभवाऽभ्यस्तं पर्वदिनं पालयतः, परमेष्ठिमन्त्रं च स्मरतः । अन्यदा पर्वतिथिपारणे कृतभोजनो नृपः पल्यङ्के क्षणं विश्रम्य यावदुत्थितस्तावद्देव्यपि वेणुवीणातालवृन्तकर्पूर-कस्तुरीचन्दनादिपात्रकलितहस्ताभिः सखीभिर्युता तत्राऽऽगाद्भद्रासने न्यषीदत् । यावद्राजा राज्ञी चाऽन्योऽन्यं काव्यकथादिकं वक्तः, तावत् द्वौ शुकीशुकौ व्योम्नाऽभ्येत्य तयोः करे स्थितौ । ताभ्यां विस्मिताभ्यां पक्षस्पर्शनपूर्वकं तावुक्तौ । कुतो युवाम् ?

शुकोऽवादीत् ।

“ यत्र रामश्चिरं तस्थौ, यत्र पञ्चापि पाण्डवाः । क्रीडन्ति यत्र राजानस्ततोऽस्माकमिहाऽऽगमः ॥ १ ॥ ”

'वनादि'ति।

राजा-शुकश्चतुरोऽयमिति समस्यामपृच्छत्।

"न रजनी न दिवा न दिवाकरः।"

शुकः प्राह—

"तव नरेन्द्र! रणाङ्गणसञ्चरत्तरलतुङ्गतुरङ्गखुरोद्धते।
रजसि खं प्रति याति विभाव्यते, न रजनी न दिवा न दिवाकरः ॥ १ ॥"

राज्ञी-शुकीं प्रति—

"रोचते या सुपुण्यानां, पापानां या न रोचते। गौराङ्गी वल्लभा पत्युः, सा नारी मम कथ्यताम् ॥ १ ॥"

शुकी प्राह-"पूर्णिमा"

शुको नृपं प्रति—

"मग्नः समुद्रो वेडायां" राजावेत्ति त(तः)।

शुक एवाऽवादीत्—

"अगस्तिहस्तचुलुके, मातेऽब्धौ वाहनाकृतौ। मग्नः समुद्रो वेडायामिति देवास्तदा जगुः ॥ १ ॥"

एवं त्रिपदी पृष्टा–आकाशे हरिणा यान्ति ?

वचा सुण्ठी हरीतकीः ?

" आषाढी कार्तिकी माघी इति त्रीणि पदानि, चतुर्थं शुक प्राह–तिथीकुर्वन्न जीवति ॥ १ ॥ "

राजा चमत्कृतः ।

शुकी राज्ञीं प्रति—

" किं जीवियस्स चिह्नं (न्धं ?)? का घरिणी होइ ? मयणरायस्स ।
का पुप्फाण पहाण परिणीया नारी किं कुणइ ? ॥ १ ॥ "

राज्ञी स्मित्वा शनैराह—

" सासरइ जाइ " ।

मख्यो हसन्ति । समस्यादिविनोदान् कुर्वन्तावितस्ततो वीक्ष्य शुकीशुकौ मूर्च्छितौ, तत्करात् पतितौ, चन्दनादिना

१–विहिता निर्विषा नागा देवाः शक्तिविवर्जिताः । निश्चेष्टाश्वगजाःसिंहाः सा बाला ध्रियते करे ॥ १ ॥ [ चित्रलेखिनी ] राजाह–कंठीजनोईऑकारइ विप्रनहीं पुण नामी अनेरइ आपणी नाचइ खीय नचावइ एवहउं नाटकउं जानावइ ॥ २ ॥ [ अरहटिउ ] शुकी–जहा अच्छइ पुन शंकर नहीं वेपरवी निर्भेळ ब्रह्मा वाकल नहीं पहिरिणि न हवइ रासु साज उछइ पुण भागउ नासु ॥ ३ ॥ [ खीडउं ] × अ. हं. ।

सिच्यमानौ नृपेण देव्या च नमस्कारे दीयमाने मृतौ। चन्दनेन दाघः( हः ? ) कारितः। इमौ काविति ध्यायतो नृपस्य प्रभाते जाते वनपालकेन विज्ञप्तः। श्रीधर्मप्रभाचार्या वनमलञ्चक्रुः। राजा तस्मै दानं दत्वा सांतःपुरपरिकरो गुरून्नन्तुमचलत्। गुर्वासन्ने पञ्चाभिगमांस्तेने। ते चामी—

" सचित्ताणं दव्वाणं विउस्सरणयाए।, अचित्ताणं दव्वाणं विउस्सरणयाए। एगल्लसाडिएणं उत्तरासंगकरणेणं। चक्खुप्फासे अंजलिपग्गहेणं। मणसो एगत्तीभावकरणेणं "। श्रीभगवत्याम्।

राजा च खड्गच्छत्रकिरीटचामरवाहनानि राजचिह्नानि त्यक्त्वा गुरून् ववन्दे। यथा आशातना न स्यात्तथा निविष्टः। रत्नवती राज्यपि स्त्रीवृन्दान्तःस्था गुरून्नत्वा यथास्थानं निविष्टा, इति सभायां नरनारीनरेश्वरादिपूरितायां गुरुभिर्देशना चक्रे।

" अहं अतिशयरूपः, पुत्रदारा ममैव, मम हि धनसमृद्धिः पण्डितश्चाहमेव इति कृतगुरुगर्वः खिद्यते किं जनोऽयं कतिपयदिनमध्ये सर्वमेतन्न किञ्चित् "।

राजा यावच्छुकस्वरूपं प्रष्टुकामस्तावत्तूर्यरवोऽभूत्। जने पश्यति तत्रत्यधनश्रेष्ठिपुत्रश्रीनाम्नी, सुखासनस्था सखीभिः क्षणे क्षणे चन्दनजलकदलीदलपत्रैरुपचर्यमाणा तत्राऽगात्। मुनिं नत्वा सा पित्रोत्सङ्गे न्यवेशि। ऊचे च। अस्यां जातायां मे राजमान्यता श्रीश्चाभूत् परमस्या यौवने किं दाहज्वरः ?। मुनिरूचे।

" भोज्यं भोजनशक्तिश्च रतेशक्तिर्वरस्त्रियः। विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥ १ ॥ "

१-नर० छा.। २-भुक्तिश्च० हं.।

अनया सम्यक् तपो नाऽऽराधि। पुरा त्रिपुराऽसन्ने वने वनेचरी काप्यभून्मुनिं [ च ] दृष्ट्वाऽपृच्छत् कथमहमीदृक् दुःस्था ? मुनिः—

" एकि रंक इकि भूपति राणा हाथ पाय सवि हुंति समाणा।
जे तपश्चरण निश्चल साधइं नंति राजि रहसिइ अण लाधइ ॥ १ ॥"

साऽवादीत्कथय किं तपः कुर्वे ? मुनिः—

सर्वेषु दिनेषु नो चेत्तदा पर्वदिने निर्विकृत्याऽऽचाम्लोपवासादितपः कार्यम्। तयाऽऽदत्तम्। साधुना प्रासुकवारि-युक्तिश्चोक्ता। यथा—

" सावगेण चाउलोदगं जवोदगं तुसोदगं उसिणोदगं वा पेयमिति। यदा सामग्री न भवति तदा गोमयं छारपानीयं वा कृत्वा पेयम्। न पुनः सचित्तमिति। सा तपः शुद्धं कुर्यात् परं नीरेऽलसा कदाचिन्नीरं प्रासुकं कुर्यात्कदाचिन्न। उष्णोदके मे न रुचिः, शीतलवारि विना न सौख्यमिति ध्यायति। अल्पवेलाऽतीतं वा पिबेत्। एवं तपः कृत्वा मृत्वा त्वत्सुता जाता सौभाग्यवती च। यौवने दाहज्वरेणाऽऽलिङ्गि। प्रासुकनीराऽनादरात्। सम्प्रत्यपि सादराऽस्तु। शनैः शनैस्तापः शमिष्यति। सापि पूर्वभवदुष्कृतं निन्दन्ती स्नानपानादिषु प्रासुकाम्भ एवैति न्ययमत् तदैव प्रासुकवारा सिक्ता शान्तैवाऽभूत् तच्छ्रुत्वा वीक्ष्य च जना अपि प्रासुकाम्भसि सादरा आसन्। पुनर्यावन्नृपः शुकस्वरूपं पृच्छति ताव[द]कस्मात् खड्गखेटकभृत् खेचरः सभार्यस्तत्र रक्ष रक्षेति ब्रुवन्नागात्। राजाह मा भैः मा भैः। खगोऽवक् पश्य व्योम्नि मे शत्रुरेति। त्वमेनां मत्प्रियां क्षणं

रक्ष यावच्छत्रुं हन्मि ।

परम्—

“ खटिका श्रीखण्डिका चैव, नारी चापि तथैव च । परहस्तगता प्रायो घृष्टस्पृष्टैव लभ्यते ॥ १ ॥ ”

इति न्यायान्न मे विश्वासः । स्वं प्रत्ययं देहि । राज्ञोक्तम् ।

“ विश्वस्तं ये विनिघ्नन्ति, स्वामिनं वा नराधमाः । तेषां पापेन लिप्येऽहं, यदि गृह्णामि ते प्रियाम् ॥१॥
धर्माक्षरप्रदातारं, स्वं मन्यन्ते न ये गुरुम् । तेषां पापेन लिप्येऽहं, यदि गृह्णामि ते प्रियाम् ॥२॥
दुर्लभं संयमं प्राप्य, ये त्यज्यन्ति नराधमाः । तेषां पापेन लिप्येऽहं, यदि गृह्णामि ते प्रियाम् ॥३॥
अदुष्टाऽपतितां भार्यां, ये त्यजन्ति विना व्रतम् । तेषां पापेन लिप्येऽहं, यदि गृह्णामि ते प्रियाम् ॥४॥
वियोजयन्ति ये बालान्, गवां स्त्रीणां गृहेण वा । तेषां पापेन लिप्येऽहं, यदि गृह्णामि ते प्रियाम् ॥५॥ ”

खगः प्राह—

एतानि महापापानि भवन्ति । परं शृणु—

“ ये कुर्वन्ति महारम्भं, श्रीमत्पर्वदिनेष्वपि । तेषां पापेन लिप्येऽहं, यदि गृह्णामि ते प्रियाम् ॥ ६ ॥ ”

यद्येनं शपथं करोषि तदा मन्ये, नान्यथा । को हेतुरत्र ? पश्चाद्वक्ष्येऽधुना शत्रुं हन्मि । राज्ञा प्रपन्ने स स्वकान्तां तत्पार्श्वे मुक्त्वा स्नेहात्तस्या रुदत्याः सकज्जलं नेत्रजलं जने पश्यति पाणिभ्यां रुक्षयित्वा वैरिणा व्योमनि गत्वा सह योद्धुं लग्नः ।

तावदेको हस्तः छिन्नोऽपतत् पृथ्व्याम्। खेचर्योक्तं हा ! मे पत्युः पाणिः छिन्नः, राजाऽऽह कथम् ? । माऽऽह–पश्य कङ्कणाङ्कितः । तावत् पृथक् पृथक् अङ्गमहितं सखड्गं शिरोऽपि पपात। साऽपि हा हेति प्रिय ! प्रियेति जल्पन्ती रुरोद ।

" मंह कन्तह बे दोसडा, अवरमरुंसि सिआलु । दिज्जं जइ हुंडगरी, हुरु तइ करवाल ॥ "

इति चिर रुदित्वा नृपमग्निं ययाचे । नृपेण जनेन वार्यमाणाऽपि चितां प्रदक्षिणयित्वोचे ।

" पवन सुणे इक वत्तडी, हिवहुं होइ सुछारु । तीणि दिसिइ तनु उडवे, जिणि दिसिइ भरतारू ॥ १ ॥ "

सा चिता विवेश । सशोको जनो यावत्तिष्ठति तावदागाञ्जितकाशी खेचरः । क्षिप्र नृपं प्रणम्याऽऽह । त्वत्प्रसादाज्जितो वैरी । प्रियामर्पय मे । राजा–किमिति चिन्तयन्न वक्ति । तेनोक्तम्—

" त्वत्तुल्या अपि भूपालाः, पालयन्ति न सङ्गरम् । रसा रसातलं यातु, रविः पततु वा भुवि ॥ १ ॥ "

राज्ञा निःश्वस्योक्तं मया मूर्खेण साऽज्वालि चितायाम् पश्य । खगो व्योम्नि लक्षं बद्ध्वा विलक्षो दिशो वीक्ष्य जनेषु साश्रुषु चितापार्श्वे गत्वोचे । हा ! प्रिये ! काऽसि ? हा ! प्राणेश ! अत्रास्मीति शब्दोऽभूत् । सोऽपि प्रियाऽत्रास्तीति वदन्नपतच्चिता[या]म् । जनो नृपो हा हेति कुर्यात्तावन्न चिता, न खगः, किन्तु सहस्रफणभृद्धरणेन्द्रः पद्मावती च । तौ मुनिं नत्वा निषण्णौ नृपमूचतुः । पौत्र ! पर्वदिने पालयेः । यदपालनात् त्वत्पितामहावावामष्टभवान् भ्रान्तौ । जने माश्चर्ये

१–तावद्राजा चिंतयति कथमेषा नवयौवनमदप्रसरपूरिताङ्गी रक्षणीया, निजधवलगृहे मुञ्चामीति चिन्तयन् गुरून् वदित्वोरस्तयो राजा० ह. । २–मह कंतह बेहुव्वडा, अवरमङ्गं पहि आल । दिज्ज तइदउ उगरी, झङ्गतकरवालि ॥ १ ॥ छा. ।

नृपोऽवक् कथमहं पौत्रः ? पितामहौ च युवाम् ?। आह नागेन्द्रः। अत्रैव पुरे पुरन्दरो राजा तस्य सुन्दरी राज्ञी तौ गुरूपदेशात्पर्वदिनं पालयतः, अपुत्रौ तौ पुरोहितेनोक्तौ—

" विना स्तम्भं यथा गेहं, यथा देहं विनाऽऽत्मना। तरुर्विना यथा मूलं, विना पुत्रं कुलं पतेत् ॥ १ ॥ "

राजाऽऽह–दैवाधीनमिदम्। सोऽवक् तथाप्युपायाः सन्ति, एकमहमपि वेद्मि। देव्याह–वद तम्। सोऽवक्।

" कृष्णाऽष्टम्याममावस्यां, सायं आषण्मासीं नरस्त्रियोः। कृष्णतिलतिलकुट्टिं, भुक्त्वा पुत्रो रताद्भवेत् ॥१॥"

आम्नायश्चायम्–सायं तिलकुट्टिर्भोक्तव्या निशीथे कान्ता च। ताभ्यामन्योऽन्यं वीक्ष्य तन्मतं कृतम्। लुप्तं च श्रीपर्वदिनं सुकृतम्। पुत्रोऽपि नाभूत्। " हस्तोऽपि दग्धः पृथुकोऽपि गतः "। अन्यदा पृष्टः साधुरूचे चेत्पापादिष्टं तदा सर्वस्यापि स्यात् परं पुण्यादेव भवति, ततस्तौ सामायिकदेवाऽर्चादयादिधर्मे लग्नौ। जातः पुत्रो धर्मशेखरः। राजन्! यत्पुत्रस्त्वमसि। अथ तौ काले तदनालोच्य मृतावजामेषौ जातौ, ततोऽपि शुनीश्वानौ, गर्तासूकरीसूकरौ, गोवृषौ, हंसीहंसौ, सप्तमभवे तौ नंदनवने जातौ शुकीशुकौ, बाल्ये खगेन धृतौ। स्वर्णपञ्जरे क्षिप्तौ च।

" शुक! यत्तव पठनव्यसनं, न गुणः स गुणाभासः। जातं येन तव मरणं, शरणं शरणं पञ्जरवासः ॥१॥"

तेन पाठितौ तौ विना स क्षणं न तिष्ठेत्, कल्ये अस्यैव पुरस्योद्यानं क्रीडया समेतो मुनिं वीक्ष्याऽनंसीत्। मुनिस्तं प्रबोध्य शुकीशुकममोचयत्। तौ व्योम्नोड्डीनौ त्वत्सौधोपरि प्राप्तौ। गतेरनभ्यासात् खिन्नौ स्नेहस्वभाव्यात्तत्र सराज्ञीकस्य करेऽस्थाताम्, समस्यादिवदन्तौ स्वसौधं च पश्यन्तौ जातिस्मृतेर्मूर्च्छितौ। त्वया राज्ञा च कृपया तत्कर्णे नमस्कारो

ऽपाठि। दैवात्तदैवायुः पूर्णं, तूर्णं तौ मृतौ। तत्प्रभावादात्रां जातौ। स्नेहादुपकारित्वाच्च स्ववृत्तज्ञस्या धर्मस्थैर्याश्चर्यं दर्शयित्वाऽत्राऽऽयातौ। पौत्र! धर्मे न प्रमाद्यमित्युक्त्वा गुरून्नत्वा तौ स्वस्थानं गतौ। इत्यन्तरे गोयमो भणइ—

"भयवं सपयंपि सो चेव नागराया! गोयमा! नो इणट्ठे समट्ठे। सो अजहन्नुक्कोसेणं चुओ संपयं भयवया पासेण बोहियो नागराया।"

अथ राजाऽपि मन्त्रिणा राज्ञ्या सह गुरूणां विज्ञपयति द्वादशधा धर्मं प्रतिपद्य भगवन्! मया नित्यं प्रासुकवारि पेयम्,[1] श्रीपर्वतिथौ पौषधः कार्यः, द्वे एव सचित्ते गृहीतव्ये इत्यादि विशेषनियमांश्च लात्वा मुनीन्नत्वा स्वपुरमगमत्। गुरवोऽन्यत्राऽगुः। ते त्रयोऽपि सम्यग् धर्मं कुर्युः। अन्येद्युर्मन्त्री स्वप्ने स्वं खरयुक्तरथस्थं वीक्ष्य प्रबुद्धः। स्वाऽऽयुः त्रुटिं ज्ञात्वा राज्ञोऽप्युक्त्वाऽनशनाराधनादिपूर्वकं परलोकं प्राप। नृपोऽपि तत् शुचं कृत्वा तत्सुतं तत्पदे न्यस्य गतशोकोऽस्तोकप्रेम्णा प्रियायुग् प्राज्यं राज्यं च धर्मं करोति। अन्यदा चतुर्दशीदिने राजा पौषधिकः इति सामन्तैरपि पौषधिकैरेव सभा पूर्णा, क्ष्मापो धर्मकथां चारेभे। तावद्राज्ञश्चरः कश्चित्पर्वदन्तर्भूत्वाऽऽसन्नीभूयेति राज्ञो व्यजिज्ञपत्। स्वामिन्! कलिङ्गदेशेशस्तवोपरि सन्नह्यति। सैन्यं निर्यदस्ति। राजा अवोचत्, अद्य पर्वाऽस्ति राजकथा न कार्यैव। स दूरेऽभूत्। जने सशङ्के प्रतोल्यां क्षुभ्याऽभूत। धावत धावत क्षत्रियाः। शत्रुभिर्नृपहयाः सरसि वारि पातुं गजा गृहीताः[2] सैन्यमेति पुरोपरि इति श्रुत्वा केऽपि कातराः पौषधं पारयित्वा, केचिदपारयित्वैव त्यक्तोत्तरीयकास्त्वरया[3] स्खलन्तो निर्ययुः। राजा तु वेत्तीव न। पुनर्नुन्ना

१ दीनदुस्थानां चाऽन्नदानं दातव्यं। २ सहस्रबुद्धिनामकम्, ह। ३ मुखपोतिकादिधर्मोपकरणाः, हं।

कृतोक्तम् । कीदृगयं निस्सत्त्वो राजा, योऽद्यापि न निर्याति । अहं सैन्यमागच्छत्प्रतोल्याऽऽरूढः पश्यामि । सामन्तैरूचे । स्वामिन् ! विरूपं सञ्जातम् । सञ्जते हयाद्या वल्लाता एवान्येऽपि याता । राजाऽऽह ।

" हयाः कस्य गजाः कस्य, कस्य देशोऽथवा पुरम् । बहीरूपमिदं सर्वमात्मीयो धर्म एव हि ॥ १ ॥ "

इति नृपे स्थिरे क्षणात्पुरं शान्तं जातम् । एवं पौषधं शुद्धं निर्वाह्य द्वितीयेऽह्नि कृतपारणः समं मन्त्रिभिरालोच्य कलिङ्गदेशं प्रति महासैन्यैः प्रतस्थे । गृहे राज्ञी पुण्यतत्त्वपराऽस्थात् । तया च अष्टम्यां पोषधश्चक्रे । दिनमतिक्रम्य रात्रौ कृतावश्यकास्वाध्यायं पठन्ती यावत्तिष्ठेत्तावत्पुरः स्वपतिं नृपं पश्येत् । किमिदमिति ध्यायन्तीं सोऽवक् । किं ध्यायसि ? । पश्य त्वया रन्तुं सैन्यादागतं स्वं वरम् । देव्याह हाहा ? कथं पर्वतिथौ सर्वपौषधे ब्रह्मभङ्गः क्रियते ? ।

राजा—

" कुलस्त्रीणां पतिः पूज्यः, पतिर्देवः पतिर्गुरुः । तस्यादेशेन तत्कार्या, पुण्यपापविचारणा ॥ १ ॥ "

देव्याह—

" पुत्त न मित्त कलत्त पहु, नहु वल्लह भरतार धीरु । निरय पडंता जीवडा, रक्खइ धम्म विचार ॥१॥ "

राजा—प्रिये । कथं श्लथं स्नेहं करोषि ।

" भास्वान् वेषः कलावांस्तव वचनविधिर्भ्रूविलासोऽपि वक्रः[३] ।

---

१ दृश्यते, हयास्तावद्गाता एव अन्यदपि याता परं हरणं पुनः, हं ।

सौम्यः स्पर्शो गुरुश्च स्तनकलशभरस्ते रतान्तः सशुक्रः ॥
मन्दो हासस्तमः श्रीघनचिकुरचयः सुभ्रुवां त्वं च केतुः ।
सेवामेवं ग्रहास्ते विदधति दयिते! रक्ष कामग्रहान्माम् ॥ १ ॥"

सेक्षतेऽपि न । राजाऽवक् । तर्हि त्वदुपरि कन्यामन्यां परिणेष्यामि । त्वया सह वक्ष्यामि अपि न ।

राज्ञी—

" लब्भंति विउलाभोगा, लब्भंति सुरसंपया ।
लब्भंति पुत्तमित्ताणि, एगो धम्मो न लब्भइ ॥ १ ॥"

सोऽदृष्टोऽभूत्, सा सुस्थिता, धर्मं कुर्यात्सदा । तयाऽऽगामिन्यां चतुर्दश्यां पौषधे कृते तत्रत्य माण्डलिकमकरध्वजेनोढा तस्या सुता मायं समेताऽऽह । हे मातस्तावद्गृहे न तातः, परिणेतुं चलिष्यति च मे देवरः । प्रातःस्नानशीर्षग्रन्थनादि सामग्रीं मे कारय माऽवक् । वत्सेऽद्याऽहं न करोमि, न कारयामि । सा रुष्यन्ती रुदन्ती ययौ । प्रात[रा]मावस्यायां धवलेषु श्रूयमाणेषु त्वरमाणः ममेतो जामाताह । श्वश्रु ! पश्य । चलितो वरः । स्वसृमातृप्रभृतयो व्यग्राः सन्ति । स्नपय माम् । साऽवग्, नाद्य करोमि कारयामि । स स्मित्वाऽऽह ।

" थीयह तिन्नि पियारडां, कलिकज्जल सिन्दूर । अन्नइ तिन्नि पियारडां, दूध जमाइ तूर ॥ १ ॥"

---

१ न पुना रत्नवत्या सावद्यवार्तापि कृता, नारीणा पुत्रेभ्यः पुत्रीणा वल्लभत्वेपि, हुं ।

साऽवक्-अद्य संसारकथा श्रूयतेऽपि न। स रुष्टोऽवददहो! कपटधर्मिणी त्वम्। तदाहं यद्यन्यां कन्यां परिणीय त्वद्धु-हितुर्हृदि शल्यं ददे तदा हृद्यं। गतः सः। सायं सैन्यमगात्। रत्नशेखरो राजा दिने पौषधो नाभूदिति रात्रिपौषधं सौधान्तर्गत्वाऽकरोत् इति। स यावत्प्रतिक्रमणादि कृत्यं कृत्वा ध्यानेन नमस्कारादि स्मरन्नस्ति तावदजनि नूपुरध्वनिः। आयाता च तारहारा विकारा करे पत्रबोटकधरा राज्ञी रत्नवती जगौ च। कातर! स्तोककालेनैव विपर्यस्तोऽसि? व्याहृताऽपि, नाहम्, राजा तां ईक्षतेऽपि न। साऽऽह।

"प्राणनाथ! त्यज ध्यानं, किं ध्यानेन तवाऽधुना। ध्याने न[2] वर्तते वेला, नाति सर्वत्र शोभते॥ १॥"

राजाह—अद्य पर्व, कृतपौषधोऽस्मि। विषयकथापि त्वदाऽऽलापनमपि[3] च न युक्तं न वेत्सि?।

साऽऽह—सर्वं वेद्मि परं कारणं स्नेह[4] एव अथवा प्राणेश! ज्ञातं तेऽपि वृत्तं, नूनमन्यस्यां युवत्यां रक्तोऽसि। एवं चेल्लभ्यमानमस्ति तदा पश्य प्रातर्मत्कृतमित्युक्त्वा सा गता। भूपो भवभावनां विभावयन् विभावरीं व्यतिक्रम्य विभाते कृतप्रभातकृत्यो नभःप्रभाकरवत्सभामभासयत्। तावदभूदन्तःपुरान्तस्तुमुलो राज्ञो याति राज्ञी याति, राज्ञि सभ्येषु च्छ्रितनेत्रेषु रत्नस्वर्णभृतां रक्तकरभीमाऽऽरूढा कस्यापि यूनो नरस्य वामाङ्गस्था मदुक्तं न कृतं तत्पश्य मत्कृतमिति नृपं प्रतिवदन्ती सा पुरत एवाऽचलत्। राजा स्वगतं।

---

१ मोहमूढानामेतानि वल्लभाति, उत्तम जनानां पुनर्देवगुरुधर्मरूपं रत्नत्रयं ज्ञानदर्शन चारित्ररूपं वा प्राणप्रियं भवति हं।

२ पि, हं०। निवर्तते, छा०। ३ आगमनपि, छा० हं०। ४ मदनमहाश्वर परवशतैव, हं०।

" धिग्नारीं कृत्रिमस्नेहां, यासां कोऽपि न वल्लभः । किन्तु कामविमूढानां, विषया एव वल्लभाः ॥ १ ॥ "

अनया किं कार्यं परं जनाऽपवाद इति ससैन्यः पृष्ठतो निरगात् । पुरो गच्छन् पश्यत्यरण्यं न सैन्यं, देव्याः करभी क्वापि दूरे क्वापि आसन्ने चेक्ष्यते । राजा हयस्तृषितो न चलेदिति । नीरं वीक्ष्य तं पायितुं उत्ततार । वाजी चाऽमरत् । अहो ! दैवस्याऽक्रमरो न यातीति ध्यायन्मध्याह्ने सूर्यकरैस्तप्तोऽवक् ।

" परपुरुषादिव सवितुः, सम्प्रति भीताः कराग्रसंस्पर्शात् ।
कुलवद्ध इव सलज्जाः, प्रविशन्ति गृहोदरं छायाः ॥ १ ॥ "

न तु मत्प्रिया एव क्षुधातृषातुरो यावत्पुरो याति तावदाम्रफलहस्तः कोऽपि द्विजस्तमूचे । भद्र ! उपोषित इव क्षुधितोऽसि लाहि फलानि ।

राजा—नाहमप्रत्याख्यानस्तिष्ठामि । फलादनादनु वारि विनाकथमाचाम्यामि ? तावदन्यः श्रवज्जलकरपात्रो द्विज आगात् पिब पय इति ब्रुवन् । राजा–नाहं सचित्तं वारि पिबामि कदाचिदपि । ताभ्यामुक्तं मूर्ख ! प्राणा यास्यन्ति ।

राजा—

" धनं यातु गृहं यातु, यान्तु प्राणाः प्रियान्विताः । साभिग्रहं पर्वदिनं, जातुचिन्नैव यातु मे ॥ १ ॥ "

तावाहतुरन्योऽन्याम् ।

" कम्मह किमइ न छूटीइ, जोउ वडउ विछन्द । प्राणहघरि, पाणी वहउ, है है हा हरिचंद । १ । "

सूक्तानि स्वोपज्ञानि—

पुनस्ताभ्यां उक्तं क्व प्रस्थितोऽसि ! ।

राजा–क्वापि दृष्टा करभी, ताभ्यामूचे । अग्रे याति ततः उत्तीर्य नृमिथुनं तरुतले स्नेहालापं कुर्वदस्ति चेत्कार्यं तदुद्याहि । राजोद्यातुं लग्नस्तावत्तारण्यं न द्विजौ । स्वसौधान्तः प्रियायुतं स्वं सिंहासनस्थं पश्यति । नृपशीर्षे पुष्पवृष्टिं कृत्वा प्रत्यक्षोऽभूच्चलत्कुण्डलो देवः । मामुपलक्षयसीत्युक्ते, राजाऽऽह । त्वं देवः । स रूपं परावृत्त्योचे । अथोपलक्षसि ? । राजाऽवक् त्वं मतिमागरो मन्त्री, परं मृतः कोऽपि न जीवतीति किमिदं ? । सोऽवक् शृणु अहं त्वन्मन्त्री समाधिभाग् मृत्वा ब्रह्मलोके सुरोऽभवम्, अन्तर्मुहूर्तपर्याप्तस्तरुणनरसदृग् । ससुरः पल्यङ्कोत्थितो देवदेवीभिः स्तूयमानोऽभिषेकादि सभा·सुकृतकृत्यः सिद्धायतने जिनानपूजयम् ।

इत्थन्तरे गोयमो भणइ "भयवं! कहं जिणा पूइया ? जिणो भणइ–जहा रायपसेणीउवंगे सूरियाभदेवेण अट्ठवि·हप्पगारेहिं तहा वरकुसुमगंधअक्खयफलजलनेविज्जदीवधूवेहिं अट्ठविहकम्महणणी जिणपूया अट्ठहा होइ ।"

यावत्सदेवः सुधर्मां गतः[1] तावद्देववृन्दं श्रीसीमन्धरस्वामिनं निनंसुं ज्ञात्वाऽसावप्यचलत् । प्रणतो भगवान् सीमन्धरः । का तस्स उप्पत्ती ! । जयाणं इह भरहे कुन्थुजिणो सिद्धो अरतित्थङ्करो अज्जवि न उप्पन्नो एरिसे समए पुव्वविदेहे पुक्खल·वइए विजये पुण्डरीगिणीए नयरीए भयवं सीमन्धरो जाओ । एवं सुव्वयनमीणं अन्तरे निक्खंतो, भविस्साणं दो उदयपेढाल·

१ यावत्सदेवः सभामण्डपे सिंहासने उपविष्टः, हं० ।

जिणाणं अंतरे सिज्झि( स्मइ )।

गाथा च।

" पुक्खलवइए विजए, पुव्वविदेहंमि पुंडरिगिणीए। कुन्थुअरअंतरंमी, जाओ सीमंधरो भयवं ॥१॥
सुव्वयजिणनमिणो अंतरंमि रज्जं चइत्तु निक्खंतो। सिरिउदयदेवपेढाल, अंतरे पाविही मुक्खं ॥२॥"

श्रूयतेऽपि—

" यदाऽत्र भरतक्षेत्रे राजा दशरथोऽभवत्। तदा सीमंधरस्वामी, विदेहे व्रतमग्रहीत् ॥ १ ॥

तेन सुरेण प्रभोर्देशनाऽश्रावि। दैवयोगाज्जिनेनापि व्याख्याने पर्वतिथिरेव वर्णिता। सुरेणोक्तं प्रभो! ऽस्ति कश्चित्तस्यां पर्वतिथौ दृढः!। प्रभुराह-घनाजनाः सन्ति। विशेषतो भरतक्षेत्रे रत्नशेखरो राजा तद्राज्ञी च देवदैत्यैरप्यक्षोभ्यौ। स्वस्वामि वर्णनाऽऽकर्णनात्मुदितोऽत्रागतः। परचक्रागमनादिकेन परीक्ष्य मिलितः सोऽहम् स्वामिनौ धन्यौ युवां, यौ जिनः प्रशंसति। एवं तौ स्तुत्वा नत्वाऽनिच्छायामपि ताभ्यां शृङ्गारं दत्वा देवो दिवं ययौ। राजाऽपि राज्यं कुर्वन् सर्वदेशे जनैः श्रीपर्वदिनमपालयत्। सप्तमीत्रयोदशीमन्ष्यायां प्रातः 'पर्वे'ति पुरे पटहोद्घोषणापूर्वममारिमकारयत्। प्रासादैस्तेन पृथ्वी मण्डिता एव, मण्डितं श्रीपर्वदिनं द्वादशविधधर्मयुक्तं प्रतिपाल्य स प्रान्ते कृताराधनानशनोऽच्युतदेवलोके इन्द्रसामानिकः सुरोऽभूत। रत्नवत्यपि राज्ञी तथैव कृतानशनेशाने देव्यभूत्। रत्नशेखरदेवोऽपि तत्र तामेव वल्लभां चक्रे।

१ पोषधपारणके सुश्रावकवात्सल्यं च, इं०।

इत्थन्तरे गोयमो भणइ " भयवं ! सो कईयावि सिद्धिं पाविहि ! सामी भणइ गोयमा ! इहेव भरहे तत्थेव रयणपुरे रायकुले जम्मं पाविऊण जिणपासे दिक्खं पडिवज्जिऊण ते तिन्निवि जीवा केवलनाणिणो सिद्धिं गमिस्संति सव्वदुक्खाणमंतं करिस्संति तउ तारिसं पव्वदिणं पालेयव्वं जारिसं एएहिं पालियं जे जीवा एयं कहं सोऊणं सिरिपव्वदिणं पडिवज्जंति ते आसन्नभव्वा नायव्वा ।"

एवं श्रीवर्द्धमानप्रभुर्बहून् जनान् पर्वतिथिदिनपालने कृतविकृतिमचित्तादित्यागं प्राबोधयत् । श्रीश्रेणिकनरेन्द्रप्रभृतयो जनाः हृष्टाः निजं स्थानं ययुः । प्रभुरपि चतुस्त्रिंशदतिशयसमेतो वसुन्धरां व्यहरत् ।

" दयावर्द्धनविज्ञेनोद्धृतैषा प्रवरा कथा । समयाम्बुनिधेर्मध्याद्धरित्र्यां जयताच्चिरम् ॥ १ ॥ "

इति पर्वतिथिदिनविचारे जगज्जनमनश्चमत्कारिणी महाप्रबोधदायिनी श्रीरत्नशेखरनरेन्द्ररत्नवतीराज्ञीकथा । समाप्तमिति । छः शुभं भवतु । ग्रन्थाग्रं ५०३ ।

श्रीपर्वतिथिदिनविचारे रत्नशेखर–रत्नवती

कथानकं समाप्तम्

श्रीलब्धिसूरीश्वरजैनग्रन्थमालाया एकोनचत्वारिंशत मणिः (३९)

श्रीदयावर्धनमुनीश्वरविरचितम् ।

श्रीपर्वतिथिदिनविचारे महाप्रबोधदायकम्

# श्रीरत्नशेखरनरेन्द्र - रत्नवतीराज्ञी कथानकम् ।

सम्पादक.- संशोधकश्च

पन्यासश्री विक्रमविजयजी गणिवर